11075CH09

## नवमः पाठः

# वस्त्रविक्रयः

प्रस्तुत पाठ महामहोपाध्याय पं. मथुराप्रसाद दीक्षितकृत "भारत–विजयनाटकम्" के प्रथमाङ्क से संकलित है। अग्नि से जली हुई शाहजहाँ की कुमारी की ओषधि–चिकित्सा करने के पश्चात् विदेशी (अंग्रेज़) भारत सम्राट् (शाहजहाँ) से बंगाल में निवास के लिए भूमि तथा वस्त्रों के क्रय और विक्रय के लिए राजमुद्राङ्कित प्रमाणपत्र प्राप्त कर लेता है। भारतीय जुलाहे स्वनिर्मित वस्त्रों को बेचने के लिए बाज़ार में उपस्थित होते हैं। वहाँ वस्त्र व्यापारियों के साथ जुलाहों का वस्त्र–विक्रय हेतु वार्तालाप होता है। उसी समय विदेशी गौराङ्ग का प्रवेश होता है। उसके हाथ में राजकीय मुद्रा से अंकित प्रमाणपत्र है। वह प्रमाणपत्र दिखाकर बहुत कम मूल्य देकर वस्त्र खरीद लेता है। वह जुलाहों को बेंत से पीटता है और उनके द्वारा निर्मित सभी वस्त्र स्वयं को देने का निर्देश देता है। यही प्रसंग इस पाठ में वर्णित है।

(*ततः प्रविशन्ति पटं विक्रेतुं क्रेतुं च कश्चित्तन्तुवायः श्रेष्ठिनौ च*)

**श्रेष्ठी** – **तन्तुवाय! किमस्य पटस्य मूल्यम्?**

**तन्तुवायः** – **विंशत्यधिकं शतम्।**

**श्रेष्ठी** – **नहि,नहि, किञ्चिदधिकमेतत्। शतं मूल्यं गृह्णीष्व**
*(ततः प्रविशति सानुचरो वैदेशिको गौराङ्गः। स राजमुद्राङ्कितप्रमाणपत्रं दर्शयित्वा श्रेष्ठिनौ तन्तुवायञ्च भर्त्सयति।)*

**वै०गौराङ्गः** – **तन्तुवाय! पश्य राजमुद्राङ्कितं प्रमाणपत्रम्। न त्वं विक्रेतुं प्रभुः।**

**तन्तुवायः** - **तर्हि किमहमेनं पटं कुर्याम्?**

**वै०गौराङ्गः** - **इमं पटं मह्यं देहि, अहमेनं पटं विक्रेष्ये, गृह्णीष्व इमाः पञ्चाशन्मुद्राः।** (*इति पञ्चाशन्मुद्रां ददाति*)।

**तन्तुवायः** - (*साश्चर्यमिव पश्यन्*) **किमिदं विधीयते? कथमेतेन मम कुटुम्बस्य भरणपोषणे भविष्यतः। षड्भिर्मासैः कथमपि रात्रिन्दिवं परिश्रम्य निष्पादितोऽयं पटः।**

**वै०गौराङ्गः** - **इमा मुद्रा गृह्णीष्व, नाहं किमपि जानामि। मौनमास्स्व, गच्छ। अपरञ्च पटं निर्माय मत्समीप एवानय। युष्मत्कुटुम्बरक्षायै न प्रतिज्ञा कृता मया। कथं रक्षा भवेदेतत् त्वं जानीहि व्रजाधुना॥**

(*स मुद्रा न गृह्णाति अथापरस्तन्तुवायः पटविक्रयार्थं प्रविश्य पटक्रयार्थं श्रेष्ठिनं लक्षयति।*)

तन्तुवायः – श्रेष्ठिन्! गृहाण पटम्।

श्रेष्ठी – (*भ्रूसंज्ञया*) अयं क्रेष्यति। नाहं क्रेतुं शक्नोमि।

तन्तुवायः – कस्मात्?

श्रेष्ठी – अस्य समीपे राज्ञः प्रमाणपत्रम् अयमेव क्रेष्यति, नापरः।

वै०गौराङ्गः – इत आगच्छ। (*तन्तुवायमाह्वयति, प्रमाणपत्रं दर्शयति। पटं गृह्णाति*) गृहाणेमाश्चत्वारिंशन्मुद्राः। (*इति मुद्रा ददाति।*)

तन्तुवायः – महाराज! किमिदं विधीयते? किमयमेव न्यायः?

वै०गौराङ्गः – गच्छ गच्छ। नाहं न्यायमन्यायं वा जानामि। यन्मया निश्चीयते दीयते च तदेव मूल्यम्। (*उभौ तद्दत्तं मूल्यं गृह्णीतः।*)

उभौ तन्तुवायौ – नातः परं पटं निर्मास्यावः (*इत्युक्त्वा गच्छतः*)

वै०गौराङ्गः – (*अनुचरमुद्दिश्य*) पश्य। एताभ्यां बह्वीर्मुद्रा ग्रहीष्ये। अनिर्वचनीयम् एतत्पटयोः सौन्दर्यम्। अति- सूक्ष्मतरोऽयं पटः । पश्य, एतस्य पञ्चषैः पटलैः परिवेष्टितमप्यपटमेव – प्रतीयतेऽङ्गम्। आः कथमेतत्समक्षमस्मद्देशीयानां पटानां विक्रयो भविष्यति, इति हतमस्मद्देशीयं वाणिज्यम्। (*पुनर्विचिन्त्य*)

एतत्सूक्ष्मपटस्य निर्मितिविधेरुन्मूलनेऽहं क्षमो
निर्मातॄनिह दण्डताडनपरस्तान् मोचयिष्याम्यतः।
कौशल्यं ह्रियतामधस्तदधिकं वाणिज्यमत्युन्नतं
देशस्यास्य समुन्नतिर्जनकथामात्रे समाधीयताम्॥

दौवारिकः – (*प्रविश्य*) जयतु जयतु देवः।

वै०गौराङ्गः – दौवारिक! सत्वरं त्रिचतुरांस्तन्तुवायान् समानय।

दौवारिकः – यद्देव आज्ञापयति। (*बहिर्गत्वा त्रीन् तन्तुवायान् समानीय प्रविशति।*)

**वै०गौराङ्गः** – (*तन्तुवायानुद्दिश्य*) **भो भो! यूयं निर्मितान् पटान् मह्यं दत्त।**

**तन्तुवायाः** – **न वयमयोग्यमूल्यत्वात् पटं निर्मामः।**

**वै०गौराङ्गः** – **अस्तु शोभनं पटं निर्माय मह्यं दत्त, योग्यं मूल्यं भविष्यति। गृहाण इमाः मुद्राः** (*इति पञ्चदशमुद्रा ददाति, ते न गृह्णन्ति, हठात्तेषां वसने निबध्य गलहस्तेन निष्कासयति*)।

**तन्तुवायाः** – (*द्वारि स्थिताः*) **महाराज! न वयं शतमूल्यं पटं पञ्चदशभिरेव मुद्राभिर्निर्मास्यामः।**

**वै०गौराङ्गः** – (*साक्षेपम्*) **क इमे कोलाहलं कुर्वन्ति** (*द्वारि गत्वा सामर्षम्, कशया तांस्ताडयति।*) **गच्छत अपरं शोभनं पटं निर्माय समानयत** (*मुद्राः प्रक्षिप्य ते गच्छन्ति।*)

**वै०गौराङ्गः** – (*अनुचरमुद्दिश्य*) **भो!भो! अपरांस्त्रिचतुरांस्तन्तुवायानानयत।** (*स निर्गत्य चतुरस्तन्तुवायानानीय*) **महाराज! एते समागताः।**

**वै०गौराङ्गः** – (*तन्तुवायानभिलक्ष्य*) **निर्मितान् कौशेयपटान् मह्यं दत्त।**

**तन्तुवायाः** – **न वयं पटान्निर्मामः।**

**वै०गौराङ्गः** – **मिथ्यैतत्। यूयं पटान्निर्माय श्रेष्ठिनां सविधे विक्रीणीध्वे ।** (*सर्वान् कशया ताडयितुं भर्त्सयति*)

**सर्वे** – **न वयं निर्मामः।** (*इति बद्धहस्तपुटाः कम्पन्ते।*)
(*निष्क्रान्ताः सर्वे*)

## शब्दार्थाः टिप्पण्यश्च

**तन्तुवायः** – जुलाहा।
**वैदेशिकः** – विदेशी।
**भर्त्सयति** – भर्त्स् + लट् प्रथम पुरूष एकवचन, डाँटता है।
**रात्रिन्दिवम्** – दिन रात।
**श्रेष्ठी** – सेठ।
**लक्ष्यति** – दिखलाता है।

| | | |
|---|---|---|
| **अनिर्वचनीयम्** | – | अवर्णनीय (जिसका वर्णन करना सम्भव नहीं है।) |
| **पञ्चषैः पटलैः** | – | पाँच छः परतों से। |
| **परिवेष्टितम्** | – | ढका हुआ (लपेटा हुआ)। |
| **सूक्ष्मपटस्य** | – | महीन वस्त्र के। |
| **निर्मितिविधिः** | – | निर्माण की रीति। |
| **कौशल्यम्** | – | निपुणता। |
| **अयोग्यमूल्यत्वात्** | – | अनुचित कीमत के कारण। |
| **हठात्** | – | बलपूर्वक। |
| **कोलाहलम्** | – | शोर। |
| **कशया** | – | कोड़े से। |
| **कौशेयपटान्** | – | रेशमी वस्त्रों को। |
| **विक्रीणीध्वे** | – | वि + क्री + लट् म० पु० बहुवचन, बेचते हो। |

## अभ्यासः

**1. अधोलिखितानां प्रश्नानामुत्तराणि संस्कृतभाषया देयानि**

(क) अयं पाठः कस्मात् ग्रन्थात् सङ्कलितः, कश्च तस्य प्रणेता?
(ख) वैदेशिको गौराङ्गः किं सन्दर्श्य श्रेष्ठिनौ तन्तुवायञ्च भर्त्सयति?
(ग) तन्तुवायेन कथं पटः निष्पादितः?
(घ) यन्मया निश्चीयते दीयते च तदेव मूल्यमिति कथनं कस्यास्ति?
(ङ) तन्तुवायाः कीदृशस्य पटस्य निर्माणमकुर्वन्?
(च) यूयं निर्मितान् पटान् मह्यं दत्त इति कः कान् प्रति कथयति?
(छ) गौराङ्गः तन्तुवायान् कथं निष्कासयति?
(ज) वैदेशिको गौराङ्गः तन्तुवायान् कया ताडयितुं भर्त्सयति?

**2. रिक्तस्थानानि पूरयत**

(क) कथमेतेन मम कुटुम्बस्य ...................... भविष्यतः।
(ख) अनिर्वचनीयम् ...................... सौन्दर्यम्।
(ग) कथमेतत्समक्षमस्मद्देशीयानां ...................... विक्रयो भविष्यति।
(घ) शोभनं पटं निर्माय मह्यं ...................... योग्यं ...................... भविष्यति।
(ङ) यूयं पटान् निर्माय ...................... सविधे विक्रीणीध्वे।

3. **सप्रसङ्गं व्याख्यायन्ताम्**

(क) युष्मत्कुटुम्बरक्षायै ...................... जानीहि व्रजाधुना।

(ख) अनिर्वचनीयमेतत्पटयोः सौन्दर्यम्। अतिसूक्ष्मतरोऽयं पटः। पश्य, एतस्य पञ्चषैः पटलैः परिवेष्टितमप्यपटमेव प्रतीयतेऽङ्गम्।

(ग) न वयमयोग्यमूल्यत्वात् पटं निर्मामः।

4. **सन्धिविच्छेदः क्रियताम्**

विंशत्यधिकम्, मुद्राङ्कितम्, विधेरुन्मूलनम्, मोचयिष्याम्यतः, सामर्षम्, मिथ्यैतत्।

5. **'एतत्सूक्ष्मपटस्येति' श्लोकस्य स्वमातृभाषया अनुवादः कार्यः**

6. **अधोलिखितेषु पदेषु धातुं प्रत्ययं च पृथक्कृत्य लिखत**

विक्रेतुम्, अनिर्वचनीयम्, विचिन्त्य, गत्वा, निबध्य, निर्माय, अभिलक्ष्य।

अग्निदग्धायाः शाहजहाँकुमारिकायाः चिकित्सा गेवरियलवाऊटनेन विहिता। केषाञ्चित् ऐतिह्यविदां मतानुसारं सत्थामसमहोदयेन विहिता। अनन्तरमारोग्यं जातम्। पुनर्बङ्गाधिपतेः शाहजादाराजकुमारशुज्जापत्न्या अपि चिकित्सा अनेनैव कृता, आरोग्यं च प्राप्तम्। पुनः फरुखशियरसम्राज आरोग्यं सर्जनविलियमहेमिल्टनद्वारा जातम्।